कः पर्वतानाम् अदधा[न्] नामानि को वनस्प[ती]नाम् अदधा[द्]
वौषधीनाम् ।
पृच्छामि त्वा भुवनस्य नाभिं शं त्वा पृच्छामि कतमानि साक्षात् ॥१०॥
देवतल्पा देवकोशः केह तन् नः प्र ब्रूहि यद् इदं प्रवेत्थ ।
पृच्छामि त्वा गर्गर किं तेभ्यो अग्निर् हव्यं वहतु प्रजानन् ।
[आ]हुतं मर्त्यैर् अमृतो मर्त्येभ्यः ॥११॥
स्वप्नेनैकस् तपसा [सा]सहीत्य् अङ्गानि पूर्वान् पुरु[ष]स्य चक्षुः ।
स प्रातर् एति तपसा पुनस् सहज्योतिर् भवति क सृजेति? ॥१२॥
[प्र]तपतिं मधुपतिं मधुपूर्वं मधुपतिम् ।
देवांस् त्वां सर्वान् पृच्छाम्य् अद्भुताद[श् च] ते कति ॥१३॥
को अन्तरिक्षात् प्रतिपश्यत इदं यस्माद् अग्र इन्द्रियं संबभूव ।
महत् सदः कस्माद् अभयं वि भाहि कस्ये कुतस्याभ्याजकालो-
हितं? परापतत केह ॥१४॥
इत्थम् एके [अर्वाञ्चः] प्र व्रजन्तीत्थम् एके दक्षिणाः प्रत्यञ्चः ।
उदञ्चः प्राञ्चो [अ]भि वृजन्त्य् एके तेषां सर्वेषाम् इह संगतिस् साकम् ॥१५॥
स एको भूतिं चरति प्रजानन् । मरीचिर् आसीत् सा मनसस् सम्
अभवत् । सा प्रार्थीत सा गर्भम् आ धत्त । स गर्भो वर्धतु स वृद्धो
ऽब्रवीज् जायैति । तस्यै प्रजापतिर् जुहो[ति] स्वाधिष्ठानाद् एति
स्वाधिचरणाच् चैति ॥१६॥
प्रजापति[स्] ससृजे कपाले विजिहातान्मासां? मत्वा पतिं महान्तं
लोकम् अभिपत्यमानः ।
सोजा? कृतस्य जातस्य द्यावापृथिवी पार्श्वे अस्तां समुद्रौ कुक्षी
सूर्याचन्द्रमसाव् अक्ष्यौ विराट् शिरः । तस्माज् जातास् सर्वे
पाप्मानो वि जायन्ते य एवं वेद ॥१७॥ ॥का° १४॥ ॥अनु° १॥

इत्यथर्ववेदे पैप्पलादशाखायां त्रयोदशः काण्डस् समाप्तः ॥

* * अरिधा ...
चो°
* * * * शां * पृच्छाम ...
* °शा * तान्न * ब्रूयदि *
* * * * तोवेभ्यो ...
°हतं मर्त्यार् ...
°नेकस् ...
* * अति * * सहाज्योतिर् इति ...
×तपति * °पूषा *
देवास्त्वं सर्व * अहृताद × × त *
* * °पश्यतेदे यस्माद् ...
* सद ...
'...व्रजन्ती इत्थम् * * प्रत्यञ्चो-
-दञ्च * * वृजत्य् ...
* * भूतिश् * * मरीच ...
* * प्रार्थीत * * * धत्ता ...
* जायायति ...
* ससृजो ..: माहन्तं
* °माने
... पार्श्वयस्तां समुद्रो *
* अक्षो ... छिरः ...

इत्यथर्वणिकपैप्पलादयशाखायां त्रयोदशः ...

